इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे अष्टमोऽध्यायः
वास्तुके गृहवास्तुकम् । आदितः पञ्चषष्टितमोऽध्यायः ।

# ६१ प्रक. वास्तुकं—वास्तुविक्रयः ।

ज्ञातिसामन्तधनिकाः क्रमेण भूमिपरिग्रहान् क्रेतुमभ्याभवेयुः । ततोऽन्ये वाह्याः ।

सामन्तचत्वारिंशत्कुल्या गृहप्रतिमुखे वेश्म श्रावयेयुः । सामन्तग्रामवृद्धेषु क्षेत्रमारामं सेतुबन्धं तटाकमाधारं वा मर्यादासु यथासेतु भोगम् । 'अनेनार्घेण कः क्रेता' इति त्रिराघुषितमव्याहृतं क्रेता क्रेतुं लभेत ।

स्पर्धया वा मूल्यवर्धने मूल्यवृद्धिः सशुल्का कोशं गच्छेत् । विक्रयप्रतिक्रोष्टा शुल्कं दद्यात् ।

अस्वामिप्रतिक्रोशे चतुर्विंशतिपणो दण्डः । सप्तरात्रादूर्ध्वमनभिसरतः प्रतिक्रुष्टो विक्रीणीत । प्रतिक्रुष्टातिक्रमे वास्तुनि द्विशतो दण्डः । अन्यत्र चतुर्विंशतिपणो दण्डः । इति वास्तुविक्रयः ।

सीमविवादं ग्रामयोरुभयोस्सामन्ताः पञ्चग्रामी दशग्रामी वा सेतुभिस्स्थावरैः कृत्रिमैर्वा कुर्यात् ।

कर्षकगोपालवृद्धकाः पूर्वभुक्तिका वा, अबाह्यास्सेतूनामनभिज्ञा बहव एको वा निर्दिश्य सामसेतून् विपरीतवेषाः सीमानं नयेयुः । उद्दिष्टानां सेतूनामदर्शने सहस्रदण्डः । तदेव नीते सीमापहारिणां सेतुच्छिदां च कुर्यात् ।

प्रनष्टं सेतुभोगं वा सीमानं राजा यथोपकारं विभजेत् ।

क्षेत्रविवादं सामन्तग्रामवृद्धाः कुर्युः । तेषां द्वैधीभावे यतो बहवश्शुचयोऽनुमता वा ततो नियच्छेयुः । मध्यं वा गृह्णीयुः । तदुभयं परोक्तं वास्तु राजा हरेत् प्रनष्टस्वामिकं च यथोपकारं वा विभजेत् ।

प्रसह्यादाने वास्तुनि स्तेयदण्डः । कारणादाने प्रयासमाजीवं च परिसङ्ख्याय बन्धं दद्यात् । मर्यादापहरणे पूर्वस्साहसदण्डः । मर्यादाभेदे चतुर्विंशतिपणः । तेन तपोवनविवीतमहापथश्मशानदेवकुलयजनपुण्यस्थानविवादा व्याख्याताः ।

इति मर्यादास्थापनम् ।

सर्वं एव विवादास्सामन्तप्रत्यया ।

विवीतस्थलकेदारषण्डखलवेश्मवाहनकोष्ठानां पूर्वं पूर्वमाबाधं सहेत । ब्रह्मसीमारण्यदेवयजनपुण्यस्थानवर्जाः स्थलप्रदेशाः । आधारपरिवाहके-दारोपभोगैः परक्षेत्रकृष्टबीजहिंसायां यथोपघातं मूल्यं दद्युः । केदारारामसेतुबन्धानां परस्परहिंसायां हिंसाद्विगुणो दण्डः ।

पश्चान्निविष्टमधरतटाकं नोपरितटाकस्य केदारमुदकेनाप्लावयेत् ।

उपरिनिविष्टं नाधरतटाकस्य पूरास्रावं वारयेद् अन्यत्र त्रिवर्षोपरत-कर्मणः । तस्यातिक्रमे पूर्वस्साहसदण्डः, तटाकवामनं च ।

पञ्चवर्षोपरतकर्मणः सेतुबन्धस्य स्वाम्यं लुप्येतान्यत्रापद्भ्यः ।

तटाकसेतुबन्धानां नवप्रवर्तने पाञ्चवर्षिकः परिहारः । भग्नोत्सृष्टानां चातुर्वर्षिकः । समुपारूढानां त्रैवर्षिकः । स्थलस्य द्वैवर्षिकः स्वात्माधाने विक्रये च ।

खातप्रावृत्तिमनदीनिबन्धायतनतटाककेदारारामषण्डवापानां सस्यवर्णभागो-त्तरिकमन्येभ्यो वा यथोपकारं दद्युः । प्रक्रयावक्रयविभागभोगनिसृष्टोप-भोक्तारश्चैषां प्रतिकुर्युः । अप्रतीकारे हीनद्विगुणो दण्डः ।

सेतुभ्यो मुञ्चतस्तोयमवारे षट्पणो दमः ।
वारे वा तोयमन्येषां प्रमादेनोपरुन्धतः ॥

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे नवमोऽध्यायः
वास्तुके वास्तुविक्रयः सीमाविवादः मर्यादास्थापनं
बाधाबाधिकम् । आदितः षट्षष्टितमोऽध्यायः ।

# ६१-६२ प्रक. वास्तुकं—विवीतक्षेत्रपथहिंसा समयस्यानपाकर्म च ।

कर्मोदकमार्गमुचितं रुन्धतः कुर्वतोऽनुचितं वा पूर्वस्साहसदण्डः ।

सेतुकूपपुण्यस्थानचैत्यदेवायतनानि च परभूमौ निवेशयतः पूर्वानुवृत्तं धर्मसेतुमाधानं विक्रयं वा नयतो नाययतो वा मध्यमस्साहसदण्डः श्रोतॄणामुत्तमः अन्यत्र भग्नोत्सृष्टात् ।

स्वाम्यभावे ग्रामाः पुण्यशीला वा प्रतिकुर्युः ।

पथिप्रमाणं दुर्गनिवेशे व्याख्यातम् ।

क्षुद्रपशुमनुष्यपथं रुन्धतो द्वादशपणो दण्डः । महापशुपथं चतुर्विंशतिपणः । हस्तिक्षेत्रपथं चतुष्पञ्चाशत्पणः । सेतुवनपथं षट्शतः । श्मशानग्रामपथं द्विशतः । द्रोणमुखपथं पञ्चशतः । स्थानीयराष्ट्रविवीतपथं साहस्रः । अतिकर्षणे चैषां दण्डचतुर्था दण्डाः । कर्षणे पूर्वोक्ताः ।

क्षैत्रिकस्याक्षिपतः क्षेत्रमुपवासस्य वा त्यजतो बीजकाले द्वादशपणो दण्डः, अन्यत्र दोषोपनिपाताविषह्येभ्यः ।

करदाः करदेष्वाधानं विक्रयं वा कुर्युः । ब्रह्मदेयिका ब्रह्मदेयिकेषु । अन्यथा पूर्वस्साहसदण्डः, करदस्य वाऽकरदग्रामं प्रविशतः ।

करदं तु प्रविशतः सर्वद्रव्येषु प्राकाम्यं स्याद्, अन्यत्रागारात् । तदप्यस्मै दद्यात् ।

अनादेयमकृषतोऽन्यः पञ्चवर्षाण्युपभुज्य प्रयासनिष्क्रयेण दद्यात् । अकरदाः परत्र वसन्तो भोगमुपजीवेयुः ।

ग्रामार्थेन ग्रामिकं व्रजन्तं उपवासाः पर्यायेणानुगच्छेयुः । अननुगच्छन्तः पणार्धपणिकं योजनं दद्युः ।

ग्रामिकस्य ग्रामादस्तेनपारदारं निरस्यतश्चतुर्विंशतिपणो दण्डः । ग्रामस्योत्तमः ।

निरस्तस्य प्रवेशो ह्याधिगमेन व्याख्यातः ।

स्तम्भैस्समन्ततो ग्रामाद्धनुश्शतापकृष्टमुपशालं कारयेत् ।

पशुप्रचारार्थं विवीतमालवनेनोपजीवेयुः ।

विवीतं भक्षयित्वावसृतानामुष्ट्रमहिषाणां पादिकं रूपं गृह्णीयुः । गवाश्वखराणां चार्धपादिकम् । क्षुद्रपशूनां षोडशभागिकम् ।

भक्षयित्वा निषण्णानामेत एव द्विगुणा दण्डाः । परिवसतां चतुर्गुणाः ।

ग्रामदेववृषा वा अनिर्दशाहा वा धेनुरुक्षाणो गोवृषाश्चादण्ड्याः ।

सस्यभक्षणे सस्योपघातं निष्पत्तितः परिसङ्ख्याय द्विगुणं दापयेत् । स्वामिनश्चानिवेद्य चारयतो द्वादशपणो दण्डः । प्रमुञ्चतश्चतुर्विंशतिपणः । पालिनामर्धदण्डः । तदेव षण्डभक्षणे कुर्यात् । वाटभेदे द्विगुणः । वेश्मखलवलयगतानां च धान्यानां भक्षणे हिंसाप्रतीकारं कुर्यात् ।

अभयवनमृगाः परिगृहीताः भक्षयन्तः स्वामिनो निवेद्य यथाऽवध्यास्तथा प्रतिषेद्धव्याः ।

पशवो रश्मिप्रतोदाभ्यां वारयितव्याः। तेषामन्यथा हिंसायां दण्डपारुष्य-दण्डाः। प्रार्थयमाना दृष्टापराधा वा सर्वोपायैर्नियन्तव्याः। इति क्षेत्रपथहिंसा।

कर्षकस्य ग्राममभ्युपेत्याकुर्वतो ग्राम एवात्ययं हरेत्। कर्माकरणे कर्मवेतनद्विगुणं, हिरण्यदाने प्रत्यंशद्विगुणं, भक्ष्यपेयादाने च प्रहवणेषु द्विगुणमंशं दद्यात्।

प्रेक्षायामनंशदः स्वस्वजनो न प्रेक्षेत। प्रच्छन्नश्रवणेक्षणे च सर्वहिते च कर्मणि निग्रहेण द्विगुणमंशं दद्यात्।

सर्वहितमेकस्य ब्रुवतः कुर्यू राज्ञाम्। अकरणे द्वादशपणो दण्डः।

तं चेत्सम्भूय वा हन्युः पृथगेषामपराधद्विगणो दण्डः। उपहन्तृषु विशिष्टः। ब्राह्मणतश्चैषां ज्येष्ठं नियम्येत।

प्रहवणेषु चैषां ब्राह्मणे नाकामाः कुर्युः। अंशं च लभेरन्।

तेन देशजातिकुलसङ्घानां समयस्यानपाकर्म व्याख्यातम्।

राजा देशहितान् सेतून् कुर्वतां पथि सङ्क्रमान्।
ग्रामशोभाश्च रक्षाश्च तेषां प्रियहितं चरेत्॥

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे दशमोऽध्यायः वास्तुके विवीतक्षेत्रपथहिंसा, वास्तुकं समाप्तं समयस्यानपाकर्म च।
आदितस्सप्तषष्टितमोऽध्यायः।

## ६३ प्रक. ऋणादानम्।

सपादपणा धर्म्या मासवृद्धिः पणशतस्य। पञ्चपणा व्यवहारिकी। दशपणा कान्तारकाणाम्। विंशतिपणा सामुद्राणाम्। ततः परं कर्तुः कारयितुश्च पूर्वस्साहसदण्डः। श्रोतृणामेकैकं प्रत्यर्धदण्डः।

राजन्ययोगक्षेमवहे तु धनिकधारणिकयोश्चरित्रमपेक्षेत।

धान्यवृद्धिस्सस्यनिष्पत्तावुपार्धा परं मूल्यकृता वर्धेत। प्रक्षेपवृद्धि-रुदयादर्धम् सन्निधानसन्ना वार्षिकी देया। चिरप्रवासस्तम्भप्रविष्टो वा मूल्यद्विगुणं दद्यात्। अकृत्वा वृद्धिं साधयतो वा मूल्यं वा वृद्धिमारोप्य श्रावयतो बन्धचतुर्गुणो दण्डः। तुच्छश्रावणायामभूतचतुर्गुणः। तस्य त्रिभागमादाता दद्यात्, शेषं प्रदाता।

दीर्घसत्रव्याधिगुरुकुलोपरुद्धं बालमसारं वानर्णमनु वर्धेत। मुच्यमान-मृणमप्रतिगृह्णतो द्वादशपणो दण्डः। कारणापदेशेन निवृत्तवृद्धिकमन्यत्र तिष्ठेत्। दशवर्षोपेक्षितमृणमप्रतिग्राह्यमन्यत्र बालवृद्धव्याधितव्यसनिप्रोषित-देशत्यागराज्यविभ्रमेभ्यः।

प्रेतस्य पुत्राः कुसीदं दद्युः। दायादा वा रिक्थहराः सहग्राहिणः प्रतिभुवो वा। न प्रातिभाव्यमन्यत्। असारं बालप्रातिभाव्यम्। असङ्ख्यातदेशकालं तु पुत्राः पौत्रा दायादा वा रिक्थं हरमाणा दद्युः। जीवितविवाहभूमिप्राति-भाव्यमसङ्ख्यातदेशकालं तु पुत्राः पौत्रा वा वहेयुः।

नानर्णसमवाये तु नैको द्वौ युगपदभिवदेयाताम् अन्यत्र प्रतिष्ठमानात्। तत्रापि गृहीतानुपूर्व्या राजश्रोत्रियद्रव्यं वा पूर्वं प्रतिपादयेत्।

दम्पत्योः पितापुत्रयोः भ्रातॄणां चाविभक्तानां परस्परकृतमृणमसाध्यम्।

अग्राह्याः कर्मकालेषु कर्षका राजपुरुषाश्च। स्त्री चाप्रतिश्राविणी पतिकृतं ऋणम् अन्यत्र गोपालकार्धसीतिकेभ्यः।

पतिस्तु ग्राह्यः। स्त्रीकृतम् ऋणमप्रतिविधाय प्रोषित इति। सम्प्रति-पत्तावुत्तमः। असम्प्रतिपत्तौ तु साक्षिणः प्रमाणम्।

प्रात्ययिकाः शुचयोऽनुमता वा त्रयोऽवरार्ध्याः। पक्षानुमतौ वा द्वौ। ऋणं प्रति, न त्वेवैकः।

प्रतिषिद्धाः स्यालसहायान्वर्थिधनिकधारणिकवैरिन्यङ्गधृतदण्डाः। पूर्वे चाव्यवहार्याः राजश्रोत्रियग्रामभृतककुष्ठिव्रणिनः पतितचण्डालकुत्सितकर्माणो-ऽन्धबधिरमूकाहंवादिनः स्त्रीराजपुरुषाश्च अन्यत्र स्ववर्गेभ्यः।

पारुष्यस्तेयसङ्ग्रहणेषु तु वैरिस्यालसहायवर्जाः। रहस्यव्यवहारेष्वेका स्त्री पुरुष उपश्रोता उपद्रष्टा वा साक्षी स्यात् राजतापसवर्जम्।

स्वामिनो भृत्यानामृत्विगाचार्याः शिष्याणां मातापितरौ पुत्राणां चानिग्रहेण साक्ष्यं कुर्युः। तेषामितरे वा। परस्पराभियोगे चैषामुत्तमाः परोक्ता दशबन्धं दद्युरवराः पञ्चबन्धम्।

इति साक्ष्यधिकारः।

ब्राह्मणोदकुम्भाग्निसकाशे साक्षिणः परिगृह्णीयात्। तत्र ब्राह्मणं ब्रूयात्—सत्यं ब्रूहीति। राजन्यं, वैश्यं वा—मा तवेष्टापूर्तफलं कपालहस्तः शत्रुबलं भिक्षार्थी गच्छेरिति। शूद्रं—जन्ममरणान्तरे यद्वः पुण्यफलं तद्राजानं गच्छेत्। राज्ञश्च किल्बिषं युष्मान् अन्यथावादे। दण्डश्चानुबन्धः। पश्चादपि ज्ञायेत यथादृष्टश्रुतम्।

एकमन्त्रास्सत्यमवहरतेति । अनवहरतां सप्तरात्रादूर्ध्वं द्वादशपणो दण्डः । त्रिपक्षादूर्ध्वमभियोगं दद्युः ।

साक्षिभेदे यतो बहवः शुचयोऽनुमता वा ततो नियच्छेयुः । मध्यं वा गृह्णीयुः । तद्वा द्रव्यं राजा हरेत् । साक्षिणश्चेदभियोगादूनं ब्रूयुरतिरिक्तस्याभियोक्ताबन्धं दद्यात् । अतिरिक्तं वा ब्रूयुस्तदतिरिक्तं राजा हरेत् । बालिश्यादभियोक्तुर्वा दुश्श्रुतं दुर्लिखितं प्रेताभिनिवेशं वा समीक्ष्य साक्षिप्रत्ययमेव स्यात् ।

साक्षिबालिश्येष्वेव पृथगनुपयोगे देशकालकार्याणां पूर्वमध्यमोत्तमा दण्डाः इत्यौशनसाः ।

कूटसाक्षिणो यमर्थमभूतं वा कुर्युर्भूतं वा नाशयेयुस्तद्दशगुणं दण्डः दद्युरिति मानवाः ।

बालिश्याद्वा विसंवादयतां चित्रो घात इति बार्हस्पत्याः ।

न, इति कौटिल्यः । ध्रुवा हि साक्षिणश्श्रोतव्याः । अशृण्वतां चतुर्विंशतिपणो दण्डः, ततोऽर्धमब्रुवाणाम् ।

देशकालाविदूरस्थान् साक्षिणः प्रतिपादयेत् ।
दूरस्थानप्रसारान् वा स्वामिवाक्येन साधयेत् ॥

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे एकादशोऽध्यायः
ऋणादानम्, आदितोऽष्टषष्टितमः ।

## ६४ प्रक. औपनिधिक्तम् ।

उपनिधिः ऋणेन व्याख्यातः । परचक्राटविकाभ्यां दुर्गराष्ट्रविलोपे वा, प्रतिरोधकैर्वा ग्रामसार्थव्रजविलोपे, चक्रयुक्ते नाशे वा, ग्राममध्याग्न्युदकाबाधे वा, किञ्चिदमोक्षयमाणे कुप्यमनिर्हार्यवर्जमेकदेशमुक्तद्रव्ये वा, ज्वालावेगोपरुद्धे वा, नावि निमग्नायां मुषितायां स्वयमुपरूढो नोपनिधिमभ्यावहेत् ।

उपनिधिभोक्ता देशकालानुरूपं भोगवेतनं दद्यात् । द्वादशपणं च दण्डम् । उपभोगनिमित्तं नष्टं विनष्टं वाऽभ्यावहेच्चतुर्विंशतिपणश्च दण्डः । अन्यथा वा निष्पतने । प्रेतव्यसनगतं वा नोपनिधिमभ्याभवहेत् ।

आधानविक्रयापव्ययनेषु चास्य चतुर्गुणपञ्चबन्धो दण्डः। परिवर्तने निष्पातने वा मूल्यसमः।

तेन आधिप्रणाशोपभोगविक्रयाधानापहारा व्याख्याताः।

नाधिस्सोपकारः सीदेत्। चास्य मूल्यं वर्धेत। निरुपकारस्सीदेन्मूल्यं चास्य वर्धेत, अन्यत्र निसर्गात्।

उपस्थितस्याधिमप्रयच्छतो द्वादशपणो दण्डः। प्रयोजकासन्निधाने वा ग्रामवृद्धेषु स्थापयित्वा निष्क्रयमाधिं प्रतिपद्येत। निवृत्तवृद्धिको वऽऽधिस्तत्कालकृतमूल्यस्तत्रैवावतिष्ठेत, अनाशविनाशकरणाधिष्ठितो वा। धारणकसन्निधाने वा विनाशभयादुद्गतार्घं धर्मस्थानुज्ञातो विक्रीणीत। आधिपालप्रत्ययो वा।

स्थावरस्तु प्रयासभोग्यः फलभोग्यो वा। प्रक्षेपवृद्धिमूल्यशुद्धमाजीवममूल्यक्षयेणोपनयेत्।

अनिसृष्टोपभोक्ता मूल्यशुद्धमाजीवं बन्धं च दद्यात्। शेषमुपनिधिना व्याख्यातम्।

एतेनादेशोऽन्वाधिश्च व्याख्यातौ।

सार्थेनान्वाधिहस्तो वा प्रदिष्टां भूमिमप्राप्तश्चोरैर्भग्नोत्सृष्टो वा नान्वाधिमभ्यावहेत। अन्तरे वा मृतस्य दायादोऽपि नाभ्यावहेत्। शेषमुपनिधिना व्याख्यातम्।

याचितकमवक्रीतकं वा यथाविधं गृह्णीयुस्तथाविधमेव अर्पयेयुः।

भ्रेषोपनिपाताभ्यां देशकालोपरोधि दत्तं नष्टं विनष्टं वानाभ्याभवेयुः। शेषमुपनिधिना व्याख्यातम्।

वैयापृत्यविक्रयस्तु—वैयापृत्यकरा यथादेशकालं विक्रीणानाः पण्यं यथाजातं मूल्यमुदयं च दद्युः।

शेषमुपनिधिना व्याख्यातम्।

देशकालातिपातने वा परिहीणं सम्प्रदानकालिकेन अर्घेण मूल्यमुदयं च दद्युः।

यथासम्भावितं वा विक्रीणाना नोदयमधिगच्छेयुः। मूल्यमेव दद्युः। अर्घपतने वा परिहीणं यथापरिहीणं मूल्यमूनं दद्युः।

सांव्यवहारिकेषु वा प्रात्ययिकेष्वराजवाच्येषु भ्रेषोपनिपाताभ्यां नष्टं विनष्टं वा मूल्यमपि न दद्युः। देशकालान्तरितानां तु पण्यानां क्षयव्ययविशुद्धं मूल्यमुदयं च दद्युः। पण्यसमवायानां च प्रत्यंशम्। शेषमुपनिधिना व्याख्यातम्।

एतेन वैय्यापृत्यविक्रयो व्याख्यातः।

निक्षेपश्चोपनिधिना । तमन्येन निक्षिप्तमन्यस्यार्पयतो हीयेत । निक्षेपापहारे पूर्वापदानं निक्षेप्तारश्च प्रमाणम् । अशुचयो हि कारवः । नैषां कारणपूर्वो निक्षेपधर्मः । कारणहीनं निक्षेपमपव्ययमानं गूढभित्तिन्यस्तान् साक्षिणो निक्षेप्ता रहस्यप्रणिपातेन प्रज्ञापयेत्, वनान्ते वा मद्यप्रहवणविश्वासेन ।

रहसि वृद्धो व्याधितो वैदेहकः कश्चित्कृतलक्षणं द्रव्यमस्य हस्ते निक्षिप्यापगच्छेत् । तस्य प्रतिदेशेन पुत्रो भ्राता वाऽभिगम्य निक्षेपं याचेत । दाने शुद्धिरन्यथा निक्षेपं स्तेयदण्डं च दद्यात् ।

प्रव्रज्याभिमुखो वा श्रद्धेयः कश्चित्कृतलक्षणं द्रव्यमस्य हस्ते निक्षिप्य प्रतिष्ठेत । ततः कालान्तरागतो याचेत । दाने शुचिरन्यथा निक्षेपं स्तेयदण्डं च दद्यात् । कृतलक्षणेन वा द्रव्येण प्रत्यानयेदेनं बालिशजातीयो वा रात्रौ राजदायिकाङ्क्षणभीतः सारमस्य हस्ते निक्षिप्यापगच्छेत् । स एनं बन्धनागारगतो याचेत । दाने शुचिरन्यथा निक्षेपं स्तेयदण्डं च दद्यात् ।

अभिज्ञानेन चास्य गृहे जनमुभयं याचेत । अन्यतरादाने यथोक्तं पुरस्तात् ।

द्रव्यभोगानामागमं चास्यानुयुञ्जीत । तस्य चार्थस्य व्यवहारोपलिङ्गनमभियोक्तुश्चार्थसामर्थ्यम् ।

एतेन मिथस्समवायो व्याख्यातः ।

तस्मात्साक्षिमदच्छन्नं कुर्यात्सम्यग्विभाषितम् ।
स्वे परे वा जने कार्यं देशकालाग्रवर्णतः ॥

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे द्वादशोऽध्यायः औपनिधिकम्, आदितः एकोनसप्ततितमः ।

## ६५ प्रक. दासकर्मकरकल्पः ।

उदरदासवर्जमार्यप्राणमप्राप्तव्यवहारं शूद्रं विक्रयाधानं नयतस्स्वजनस्य द्वादशपणो दण्डः । वैश्यं द्विगुणः । क्षत्रियं त्रिगुणः । ब्राह्मणं चतुर्गुणः । परजनस्य पूर्वमध्यमोत्तमवधा दण्डाः क्रेतृश्रोतृणां च ।

म्लेच्छानामदोषः प्रजां विक्रेतुमाधातुं वा । न त्वेवार्यस्य दासभावः ।

अथवाऽऽर्यमाधाय कुलबन्धनम् आर्याणामापदि निष्क्रयं चाधिगम्य बालं साहाय्यदातारं वा पूर्वं निष्क्रीणारन् ।

सकृदात्माधाता निष्पतितः सीदेत् । द्विरन्येनाहितकः । सुकृदुभौ परविषयाभिमुखौ ।

वित्तापहारिणो वा दासस्यार्यभावमपहरतोऽर्धदण्डः । निष्पतितप्रेतव्यसनिनामाधाता मूल्यं भजेत ।

प्रेतविण्मूत्रोच्छिष्टग्राहणामाहितस्य नग्नस्नापनं दण्डप्रेषणमतिक्रमणं च स्त्रीणां मूल्यनाशकरम् । धात्रीपरिचारिकार्धसीतिकोपचारिकाणां च मोक्षकरम् । सिद्धमुपचारकस्याभिप्रजातस्य अपक्रमणम् ।

धात्रीमाहितिकां वाकामां स्ववशामधिगच्छतः पूर्वस्साहसदण्डः, परवशां मध्यमः । कन्यामाहितकां वा स्वयमन्येन वा दूषयतः मूल्यनाशः शुल्कं तद्द्विगुणश्च दण्डः ।

आत्मविक्रयिणः प्रजामार्यां विद्यात् । आत्माधिगतं स्वामिकर्माविरुद्धं लभेत, पित्र्यं च दायम् । मूल्येन चार्यत्वं गच्छेत् ।

तेनोदरदासाहितकौ व्याख्यातौ ।

प्रक्षेपानुरूपश्चास्य निष्क्रयः । दण्डप्रणीतः कर्मणा दण्डमुपनयेत् ।

आर्यप्राणो ध्वजाहृतः कर्मकालानुरूपेण मूल्यार्धेन वा विमुच्येत ।

गृहेजातदायागतलब्धक्रीतानामन्यतमं दासमूनाष्टवर्षं विबन्धुमकामं नीचे कर्मणि विदेशे दासीं वा सगर्भामप्रतिविहितगर्भभर्मण्यां विक्रयाधानं नयतः पूर्वस्साहसदण्डः क्रेतृश्रोतॄणां च ।

दासमनुरूपेण निष्क्रयेणार्यमकुर्वतो द्वादशपणो दण्डः । संरोधश्चाकारणात् । दासद्रव्यस्य ज्ञातयो दायादाः । तेषाम् अभावे स्वामी ।

स्वामिनस्स्वस्यां दास्यां जातं समातृकम् अदासं विद्यात् । गृह्या चेत् कुटुम्बार्थचिन्तनी, माता भ्राता भगिनी चास्याः अदासास्स्युः ।

दासं दासीं वा निष्क्रीय पुनर्विक्रयाधानं नयतो द्वादशपणो दण्डः, अन्यत्र स्वयंवादिभ्यः ।

इति दासकल्पः ।

कर्मकरस्य कर्मसम्बन्धमासन्ना विद्युः । यथासम्भाषितं वेतनं लभेत । कर्मकालानुरूपमसम्भाषितवेतनम् । कर्षकरसस्यानां, गोपालकस्सर्पिषां, वैदेहकः पण्यानामात्मना व्यवहृतानां, दशभागमसम्भाषितवेतनो लभेत । सम्भाषितवेतनस्तु यथासम्भाषितम् ।

कारुशिल्पिकुशीलवचिकित्सकवाग्जीवनपरिचारिकादिराशाकारिकवर्गस्तु यथाऽन्यस्तद्विधः कुर्यात् । यथा वा कुशलाः कल्पयेयुः, तथा वेतनं लभेत । साक्षिप्रत्ययमेव स्यात् । साक्षिणामभावे यतः कर्म ततोऽनुयुञ्जीत ।

वेतनादाने दशबन्धो दण्डः, षट्पणो वा । अपव्ययमाने द्वादशपणो दण्डः, पञ्चबन्धो वा ।

नदीवेगज्वालास्तेनव्यालोपरुद्धः सर्वस्वपुत्रदारात्मदानेनार्तस्त्रातारमाहूय निस्तीर्णः कुशलप्रदिष्टं वेतनं दद्यात् ।

तेन सर्वत्रार्तदानानुशया व्याख्याताः ।

लभेत पुंश्चली भोगं सङ्गमस्योपलिङ्गनात् ।
अतियाच्ञा तु जीयेत दौर्मत्याविनयेन वा ॥

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे त्रयोदशोऽध्यायः
दासकर्मकल्पो दासकल्पः कर्मकरकल्पे स्वाम्यधिकारः,
आदितस्सप्ततितमोऽध्यायः ।

## ६६ प्रक. कर्मकरकल्पः, सम्भूयसमुत्थानम् ।

गृहीत्वा वेतनं कर्म अकुर्वतो भृतकस्य द्वादशपणो दण्डः । संरोधश्चाकरणात् ।

अशक्तः कुत्सिते कर्मणि व्याधौ व्यसने वा अनुशयं लभेत । परेण वा कारयितुम् । तस्य व्ययकर्मणा लभेत भर्ता वा कारयितुम् ।

नान्यस्त्वया कारयितव्यो मया वा नान्यस्य कर्तव्यम् इत्यवरः । भर्तुरकारयतो भृतकस्याकुर्वतो वा द्वादशपणो दण्डः । कर्मनिष्ठापने भर्तुरन्यत्र गृहीतवेतनो नासकामः कुर्यात् ।

उपस्थितमकारयतः कृतमेव विद्यात् इत्याचार्याः ।

"न" इति कौटिल्यः । कृतस्य वेतनं, नाकृतस्यास्ति । स चेदल्पमपि कारयित्वा न कारयेत्, कृतमेव अस्य विद्यात् । देशकालातिपातनेन कर्मणामन्यथाकरणे वा नासकामः कृतमनुमन्येत । सम्भाषितादधिकक्रियायां प्रयासं मोघं कुर्यात् ।

तेन सङ्घभृता व्याख्याताः । तेषामाधिस्सप्तरात्रमासीत । ततोऽन्यमुप-

स्थापयेत् । कर्मनिष्पाकं च । न चानिवेद्य भर्तुस्सङ्घः कञ्चित्परिहरेत्, उपनयेद्वा । तस्यातिक्रमे चतुर्विंशतिपणो दण्डः । सङ्घेन परिहृतस्यार्धदण्डः ।

इति भृतकाधिकारः ।

सङ्घभृतास्सम्भूयसमुत्थातारो वा यथासम्भाषितं वेतनं समं वा विभजेरन् ।

कर्षकवैदेहका वा सस्यपण्यारम्भपर्यवसानान्तरे सन्नस्य यथाकृतस्य कर्मणः प्रत्यंशं दद्युः । पुरुषोपस्थाने समग्रमंशं दद्युः । संसिद्धे तूद्धृतपण्ये सन्नस्य तदानीमेव प्रत्यंशं दद्युः । सामान्या हि पथि सिद्धिश्चासिद्धिश्च ।

प्रक्रान्ते तु कर्मणि स्वस्थस्यापक्रमता द्वादशपणो दण्डः । न च प्राकाम्यमपक्रमणे ।

चोरं त्वभयपूर्वं कर्मणः प्रत्यंशेन ग्राहयेद्द्यात् प्रत्यंशमभयं च । पुनस्स्तेये प्रवासनमन्यत्र गमने च । महापराधे तु दूष्यवदाचरेत् ।

याजकाः स्वप्रचारद्रव्यवर्जं यथासम्भाषितं वेतनं समं वा विभजेरन् । अग्निष्टोमादिषु च क्रतुषु दीक्षणादूर्ध्वं याजकस्सन्नः पञ्चममंशं लभेत । सोमविक्रयादूर्ध्वं चतुर्थमंशम् । मध्यमोपसदः प्रवर्ग्योद्वासनादूर्ध्वं तृतीयमंशम् । मध्यादूर्ध्वमर्धमंशम् । सुत्ये प्रातस्सवनादूर्ध्वं पादोनमंशम् । माध्यन्दिनात् सावनादूर्ध्वं समग्रमंशं लभेत । नीता हि दक्षिणा भवन्ति । बृहस्पतिसवनवर्जं प्रतिसवनं हि दक्षिणा दीयन्ते । तेनाहर्गणदक्षिणा व्याख्याताः ।

सन्नानामा दशाहोरात्राच्छेषभृताः कर्म कुर्युः । अन्ये वा स्वप्रत्ययाः ।

कर्मण्यसमाप्ते तु यजमानस्सीदेत्, ऋत्विजः कर्म समापय्य दक्षिणां हरेयुः । असमाप्ते तु कर्मणि याज्यं याजकं वा त्यजतः पूर्वस्साहसदण्डः ।

अनाहिताग्निश्शतगुरयज्वा च सहस्रगुः ।
सुरापो वृषलीभर्ता ब्रह्महा गुरुतल्पगः ।
असत्प्रतिग्रहे युक्तः स्तेनः कुत्सितयाजकः ।
अदोषस्त्यक्तुमन्योन्यं कर्मसङ्करनिश्चयात् ॥

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे चतुर्दशोऽध्यायः दासकर्मकरकल्पे भृतकाधिकारः सम्भूयसमुत्थानम्, आदित एकसप्ततितमः ।

# ६७ प्रक. विक्रीतक्रीतानुशयः ।

विक्रीय पण्यमप्रयच्छतो द्वादशपणो दण्डः, अन्यत्र दोषोपनिपाताविषह्येभ्यः ।

पण्यदोषो दोषः । राजचोराग्न्युदकबाध उपनिपातः । बहुगुणहीनमार्तकृतं वाऽविषह्यम् ।

वैदेहकानामेकरात्रमनुशयः । कर्षकाणां त्रिरात्रम् । गोरक्षकाणां पञ्चरात्रम् । व्यामिश्राणाम् उत्तमानां च वर्णानां वृत्तिविक्रये सप्तरात्रम् ।

आतिपातिकानां पण्यानामन्यत्राविक्रेयमित्यविरोधेनानुशयो देयः । तस्यातिक्रमे चतुर्विंशतिपणो दण्डः, पण्यदशभागो वा ।

क्रीत्वा पण्यमप्रतिगृह्णतो द्वादशपणो दण्डः, अन्यत्र दोषोपनिपाताविषह्येभ्यः । समानश्चानुशयः विक्रेतुरनुशयेन ।

विवाहानां तु त्रयाणां पूर्वेषां वर्णानां पाणिग्रहणात्सिद्धमुपावर्तनम् । शूद्राणां च प्रकर्मणः । वृत्तपाणिग्रहणयोरपि दोषमौपशायिकं दृष्ट्वा सिद्धमुपावर्तनम् । नत्वेवाभिप्रजातयोः ।

कन्यादोषमौपशायिकमनाख्याय प्रयच्छतः षण्णवतिर्दण्डः शुल्कस्त्रीधनप्रतिदानं च ।

वरयितुर्वा वरदोषमनाख्याय विन्दतो द्विगुणः । शुल्कस्त्रीधननाशश्च ।

द्विपदचतुष्पदानां तु कुष्ठव्याधितानामशुचीनामुत्साहस्वास्थ्यशुचीनानामाख्याने द्वादशपणो दण्डः ।

आ त्रिपक्षादिति चतुष्पदानामुपावर्तनम् । आ संवत्सरादिति मनुष्याणाम् । तावता हि कालेन शक्यं शौचाशौचे ज्ञातुमिति ।

दाता प्रतिग्रहीता च स्यातां नोपहतौ यथा ।
दाने क्रये वाऽनुशयं तथा कुर्युस्सभासदः ॥

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे पञ्चदशोऽध्यायः
विक्रीतक्रीतानुशयः, आदितो द्विसप्ततितमः ।

---

# ६८–७० प्रक. दत्तस्यानपाकर्म, अस्वामिविक्रयः, स्वस्वामिसंबन्धः ।

दत्तस्याप्रदानमृणादानेन व्याख्यातम् ।

दत्तमव्यवहार्यमेकत्रानुशये वर्तेत । सर्वस्वं पुत्रदारं आत्मानं प्रदायानुशयिनः प्रयच्छेत् । धर्मदानमसाधुषु, कर्मसु चौपघातिकेषु वा । अर्थदानमनुपकारिषु अपकारिषु वा । कामदानमर्हेषु च । यथा च दाता प्रतिग्रहीता च नोपहतौ स्याताम्, तथानुशयं कुशलाः कल्पयेयुः ।

दण्डभयादाक्रोशभयादनर्थभयाद्वा भयदानं प्रतिगृह्णतस्स्तेयदण्डः प्रयच्छतश्च । रोषदानं परहिंसायाम् । राज्ञामुपरि दर्पदानं च । तत्रोत्तमो दण्डः ।

प्रतिभाव्यं दण्डशुल्कशेषमाक्षिकं सौरिकं कामदानं च नाकामः पुत्रो दायादो वा रिक्थहरो दद्यात् ।

इति दत्तस्यानपाकर्म ।

अस्वामिविक्रयस्तु—नष्टापहृतमासाद्य स्वामी धर्मस्थेन ग्राहयेत् । देशकालातिपत्तौ वा स्वयं गृहीत्वोपहरेत् । धर्मस्थश्च स्वामिनमनुयुञ्जीत— "कुतस्ते लब्धम्" इति । स चेदाचारक्रमं दर्शयेत, न विक्रेतारं तस्य द्रव्यस्यातिसर्गेण मुच्येत । विक्रेता चेद्दृश्येत, मूल्यं स्तेयदण्डं च । स चेदपसारमधिगच्छेदपसरेदापसारक्षयादिति क्षये । मूल्यं स्तेयदण्डं च दद्यात् ।

नाष्टिकं च स्वकरणं कृत्वा नष्टप्रत्याहृतं लभेत । स्वकरणाभावे पञ्चबन्धो दण्डः । तच्च द्रव्यं राजधर्म्यं स्यात् ।

नष्टापहृतमनिवेद्योत्कर्षतः स्वामिनः पूर्वं साहसदण्डः ।

शुल्कस्थाने नष्टापहृतोत्पन्नं तिष्ठेत् । त्रिपक्षादूर्ध्वमनभिसारं राजा हरेत्, स्वामी वा स्वकरणेन ।

पञ्चपणिकं द्विपदरूपस्य निष्क्रयं दद्यात् । चतुष्पणिकमेकखुरस्य । द्विपणिकं गोमहिषस्य । पादिकं क्षुद्रपशूनाम् । रत्नसारफल्गुकुप्यानां पञ्चकं शतं दद्यात् ।

परचक्राटवीहृतं तु प्रत्यानीय राजा यथास्वं प्रयच्छेत् । चोरहृतमविद्यमानं स्वद्रव्येभ्यः प्रयच्छेत् प्रत्यानेतुमशक्तो वा । स्वयं ग्राहेणाहृतं प्रत्यानीय तन्निष्क्रयं वा प्रयच्छेत् ।

परविषयाद्वा विक्रमेणानीतं यथाप्रदिष्टं राज्ञा भुञ्जीतान्यत्रार्यप्राणेभ्यो देवब्राह्मणतपस्विद्रव्येभ्यश्च ।

इत्यस्वामिविक्रयः।

स्वस्वामिसम्बन्धस्तु—भोगानुवृत्तिरुच्छिन्नदेशानां यथास्वं द्रव्याणाम्।

यत् स्वं द्रव्यमन्यैर्भुज्यमानं दश वर्षाण्युपेक्षेत, हीयेतास्य अन्यत्र बालवृद्धव्याधितव्यसनिप्रोषितदेशत्यागराज्यविभ्रमेभ्यः।

विंशतिवर्षोपेक्षितमनुवसितं वास्तुं नानुयुञ्जीत।

ज्ञातयश्श्रोत्रियाः पाषण्डा वा राज्ञामसन्निधौ परवास्तुषु विवसन्तो न भोगेन हरेयुः; उपनिधिमाधिं निधिं निक्षेपं स्त्रियं सीमानं राजश्रोत्रियद्रव्याणि च।

आश्रमिणः पाषण्डा वा महत्यवकाशे परस्परमबाधमाना वसेयुः। अल्पां बाधां संहरन्। पूर्वागतो वा वासपर्यायं दद्यात्। अप्रदाता निरस्येत।

वानप्रस्थयतिब्रह्मचारिणामाचार्यशिष्यधर्मभ्रातृसमानतीर्थ्या रिक्थभाजः क्रमेण।

विवादपदेषु चैषां यावन्तः पणाः दण्डाः तावती रात्रीः क्षपणाभिषेकाग्निकार्यमहाकृच्छ्रवर्धनानि राज्ञश्चरेयुः। अहिरण्यसुवर्णाः पाषण्डास्साधवः। ते यथास्वमुपवासव्रतैराराधयेयुः, अन्यत्र पारुष्यस्तेयसाहसंग्रहणेभ्यः। तेषु यथोक्ता दण्डाः कार्याः।

प्रव्रज्यासु वृथाचाराञ्राजा दण्डेन वारयेत्।
धर्मो ह्यधर्मोपहतः शास्तारं हन्त्युपेक्षितः॥

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे षोडशोऽध्यायः
दत्तस्यानपकर्म अस्वामिविक्रयः स्वस्वामिसम्बन्धः,
आदितस्त्रिसप्ततितमः।

## ७१ प्रक. साहसम्।

साहसमन्वयवत्प्रसभकर्म।

निरन्वये स्तेयमपव्ययने च।

"रत्नसारफल्गुकुप्यानां साहसे मूल्यसमो दण्डः" इति मानवाः।

"मूल्यद्विगुणः" इत्यौशनसाः।

"यथापराधः" इति कौटिल्यः।

पुष्पफलशाकमूलकन्दपक्वान्नचर्मवेणुमृद्भाण्डादीनां क्षुद्रकद्रव्याणां द्वादश-पणावरश्चतुर्विंशतिपणपरो दण्डः ।

कालायसकाष्ठरज्जुद्रव्यक्षुद्रपशुवाटादीनां स्थूलकद्रव्याणां चतुर्विंशति-पणावरोऽष्टचत्वारिंशत्पणपरो दण्डः । ताम्रवृत्तकंसकाचदन्तभाण्डादीनां स्थूलकद्रव्याणाम् अष्टचत्वारिंशत्पणावरं षण्णवतिपरः पूर्वस्साहसदण्डः । महापशुमनुष्यक्षेत्रगृहहिरण्यसुवर्णसूक्ष्मवस्त्रादीनां स्थूलकद्रव्यानां द्विशतावरः पञ्चशतपरः मध्यमस्साहसदण्डः ।

स्त्रियं पुरुषं वाऽभिषह्य बध्नतो बन्धयतो बन्धं वा मोक्षयतः पञ्चशतावरः सहस्रपर उत्तमः साहसदण्डः इत्याचार्याः ।

यस्साहसं प्रतिपत्तेति कारयति स गुणं दद्यात् । यावद्धिरण्यमुपयोक्ष्यते तानदास्यामि इति स चतुर्गुणं दण्डं दद्यात् ।

य एतावद्धिरण्यं दास्यामि इति प्रमाणमुद्दिश्य कारयति स यथोक्तं हिरण्यं दण्डं च दद्याद् इति बार्हस्पत्याः ।

स चेत्कोपं मदं मोहं वाऽपदिशेत्, यथोक्तवद्दण्डमेनं कुर्यादिति कौटिल्यः ।

दण्डकर्मसु सर्वेषु रूपमष्टपणं शतम् ।
शतावरेषु तु व्याजीं च विद्यात्पञ्चपणं शतम् ॥
प्रजानां दोषबाहुल्याद्राज्ञां वा भावदोषतः ।
रूपव्याज्यावधर्मिष्ठे धर्म्या तु प्रकृतिस्स्मृता ॥

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे सप्तदशोऽध्यायः,
साहसम्, आदितश्चतुस्सप्ततितमः ।

## ७२ प्रक. वाक्पारुष्यम् ।

वाक्पारुष्यमुपवादः कुत्सनमभिभर्त्सनमिति ।

शरीरप्रकृतिश्रुतवृत्तिजनपदानां शरीरोपवादेन काणखञ्जादिभिस्सत्ये त्रिपणो दण्डः । मिथ्योपवादे षट्पणो दण्डः ।

शोभनाक्षिदन्त इति काणखञ्जादीनां स्तुतिनिन्दायां द्वादशपणो दण्डः । कुष्ठोन्मादक्लैब्यादिभिः कुत्सायां च ।

सत्यमिथ्यास्तुतिनिन्दासु द्वादशपणोत्तरा दण्डाः तुल्येषु । विशिष्टेषु

द्विगुणः। हीनेष्वर्धदण्डः। परस्त्रीषु द्विगुणः। प्रमादमदमोहादिभिरर्धदण्डाः।

कुष्ठोन्मादयोश्चिकित्सकाः सन्निकृष्टाः पुमांसश्च प्रमाणम्। क्लीबभावे स्त्रियः मूत्रफेनम् अप्सु विष्ठानिमज्जनं च।

प्रकृत्योपवादे ब्राह्मणक्षत्रियवैश्यशूद्रान्तावसायिनामपरेण पूर्वस्य त्रिपणोत्तराः दण्डाः। पूर्वेणापरस्य द्विपणाधराः कुब्राह्मणादिभिश्च कुत्सायाम्।

तेन श्रुतोपवादः वाग्जीवनानां, कारुकुशीलवानां वृत्त्युपवादः, प्राग्घूणकः गान्धारादीनां च जनपदोपवादा व्याख्याताः।

यः परं "एवं त्वां करिष्यामि" इति करणेनाभिभर्त्सयेदकरणे, यस्तस्य करणे दण्डः, ततोऽर्धदण्डं दद्यात्।

अशक्तः कोपं मदं मोहं वाऽपदिशेत्, द्वादशपणं दद्यात्।

जातवैराशयः शक्तश्चापकर्तुं यावज्जीविकावस्थं दद्यात्।

स्वदेशग्रामयोः पूर्वं मध्यमं जातिसङ्घयोः।
आक्रोशाद्देवचैत्यानाम् उत्तमं दण्डमर्हति ॥

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे अष्टादशोऽध्यायः, वाक्पारुष्यम्, आदितः पञ्चसप्ततितमः।

## ७३ प्रक. दण्डपारुष्यम्।

दण्डपारुष्यं स्पर्शनमवगूर्णं प्रहतमिति।

नाभेरधः कायं हस्तपङ्कभस्मपांसुभिरिति स्पृशतस्त्रिपणो दण्डः।

तैरेवामेध्यैः पादष्ठीविकाभ्यां च षट्पणः। छर्दिमूत्रपुरीषादिभिर्द्वादशपणः। नाभेरुपरि द्विगुणाः। शिरसि चतुर्गुणाः समेषु।

विशिष्टेषु द्विगुणाः। हीनेषु अर्धदण्डाः। परस्त्रीषु द्विगुणाः। प्रमादमदमोहादिभिरर्धदण्डाः।

पादवस्त्रहस्तकेशावलम्बनेषु षट्पणोत्तरा दण्डाः।

पीडनावेष्टनाञ्जनप्रकर्षणाध्यासनेषु पूर्वस्साहसदण्डः। पातयित्वाऽपक्रमतोऽर्धदण्डाः।

शूद्रो येनाङ्गेन ब्राह्मणमभिहन्यात्तदस्य छेदयेत् ।

अवगूर्णे निष्क्रयः, स्पर्शेऽर्धदण्डः । तेन चण्डालाशुचयो व्याख्याताः ।

हस्तेनावगूर्णे त्रिपणावरो द्वादशपणपरो दण्डः । पादेन द्विगुणः । दुःखोत्पादनेन द्रव्येण पूर्वस्साहसदण्डः । प्राणाबाधिकेन मध्यमः ।

काष्ठलोष्टपाषाणलोहदण्डरज्जुद्रव्याणामन्यतमेन दुःखमशोणितमुत्पादयतश्चतुर्विंशतिपणो दण्डः । शोणितोत्पादने द्विगुणः, अन्यत्र दुष्टशोणितात् ।

मृतकल्पमशोणितं घ्नतो हस्तपादपारंचिकां वा कुर्वतः पूर्वस्साहसदण्डः ।

पाणिपाददन्तभङ्गे कर्णनासाच्छेदने व्रणविदारणे च अन्यत्र दुष्टव्रणेभ्यः ।

सक्थिग्रीवाभञ्जने नेत्रभेदने वा वाक्यचेष्टाभोजनोपरोधेषु च मध्यमस्साहसदण्डः । समुत्थानव्ययश्च । विपत्तौ कण्टकशोधनाय नीयेत ।

महाजनस्यैकं घ्नतो प्रत्येकं द्विगुणो दण्डः ।

पर्युषितः कलहोऽनुप्रवेशो वा नाभियोज्य इत्याचार्याः ।

नास्त्यपकारिणो मोक्ष इति कौटिल्यः ।

कलहे पूर्वागतो जयति अक्षममाणो हि प्रधावति इत्याचार्याः ।

'न' इति कौटिल्यः । पूर्वं पश्चाद्वाऽऽगतस्य साक्षिणः प्रमाणम् । असाक्षिके घातः कलहोपलिङ्गनं वा ।

घाताभियोगमप्रतिब्रुवतस्तदहरेव पश्चात्कारः ।

कलहे द्रव्यमपहरतो दशपणो दण्डः ।

क्षुद्रकद्रव्यहिंसायां तच्च तावच्च दण्डः ।

स्थूलकद्रव्यहिंसायां तच्च द्विगुणश्च दण्डः ।

वस्त्राभरणहिरण्यसुवर्णभाण्डहिंसायां तच्च पूर्वश्च साहसदण्डः ।

परकुड्यमभिघातेन क्षोभयतस्त्रिपणो दण्डः । छेदनभेदने षट्पणः, पातनभञ्जने द्वादशपणः प्रतीकारश्च ।

दुःखोत्पादनं द्रव्यमस्य वेश्मनि प्रक्षिपतो द्वादशपणो दण्डः । प्राणाबाधिकं पूर्वस्साहसदण्डः ।

क्षुद्रपशूनां काष्ठादिभिर्दुःखोत्पादने पणो द्विपणो वा दण्डः । शोणितोत्पादने द्विगुणः ।

महापशूनामेतेष्वेव स्थानेषु द्विगुणो दण्डः, समुत्थानव्ययश्च ।

पुरोवनस्पतीनां पुष्पफलच्छायावतां प्ररोहच्छेदने षट्पणः । क्षुद्रशाखाच्छेदने द्वादशपणः । पीनशाखाच्छेदने चतुर्विंशतिपणः । स्कन्धवधे पूर्वस्साहसदण्डः । समुच्छित्तौ मध्यमः ।

पुष्पफलच्छायावद्गुल्मलतास्वर्धदण्डः । पुण्यस्थानतपोवनश्मशानद्रुमेषु च ।

सीमवृक्षेषु चैत्येषु द्रुमेष्वालक्षितेषु च ।
त एव द्विगुणा दण्डाः कार्या राजवनेषु च ।।

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे एकोनविंशोऽध्यायः, दण्डपारुष्यम् । आदितष्षट्सप्ततितमः ।

## ७४-७५ प्रक. द्यूतसमाह्वयं प्रकीर्णकानि ।

द्यूताध्यक्षो द्यूतमेकमुख कारयेत् । अन्यत्र दीव्यतो द्वादशपणो दण्डः गूढाजीविज्ञापनार्थम् ।

द्यूताभियोगे जेतुः पूर्वस्साहसदण्डः । पराजितस्य मध्यमः । बालिशजातीयो ह्येष जेतुकामः पराजयं न क्षमते इत्याचार्याः । 'न' इति कौटिल्यः । पराजितश्चेद् द्विगुणदण्डः क्रियेत, न कश्चन राजानमभिसरिष्यति । प्रायशो हि कितवाः कूटदेविनः । तेषामध्यक्षाः शुद्धाः काकणीरक्षांश्च स्थापयेयुः ।

काकण्यक्षीणामन्योपधाने द्वादशपणो दण्डः । कूटकर्मणि पूर्वस्साहसदण्डः, जितप्रत्यादानम । उपधौ स्तेयदण्डश्च ।

जितद्रव्यादध्यक्षः पञ्चकं शतमाददीत, काकण्यक्षारलाशलाकावक्रयमुदकभूमिकर्मक्रयं च । द्रव्याणामाधानं विक्रयं च कुर्यात् । अक्षभूमिहस्तदोषाणां चाप्रतिषेधने द्विगुणो दण्डः ।

तेन समाह्वयो व्याख्यातः अन्यत्र विद्याशिल्पसमाह्वयादिति ।

प्रकीर्णकं तु । याचितकावक्रीतकाहितकनिक्षेपकाणां यथादेशकालमदाने, यामच्छायासमुपवेशसंस्थितीनां वा देशकालातिपातने, गुल्मतरदेयं ब्राह्मणं साधयतः प्रतिवेशानुवेशयोरुपरि निमन्त्रणे च द्वादशपणो दण्डः ।

सन्दिष्टमर्थमप्रयच्छतो, भ्रातृभार्यां हस्तेन लङ्घयतो रूपाजीवामन्योपरुद्धां गच्छतः, परवक्तव्यं पण्यं क्रीणानस्य, समुद्रं गृहमुद्भिन्दतः ; सामन्तचत्वारिंशत्कुल्या बाधामाचरतश्चाष्टचत्वारिंशत्पणो दण्डः ।

कुलनीवीग्राहकस्यापव्ययने, विधवां छन्दवासिनीं प्रसह्याधिचरतः,

चण्डालस्यार्यां स्पृशतः, प्रत्यासन्नमापद्यनभिधावतो निष्कारणमभिधावनं कुर्वतः, शाक्याजीवकादीन् वृषलप्रव्रजितान् देवपितृकार्येषु भोजयतश्शत्यो दण्डः।

शपथवाक्यानुयोगमनिसृष्टं कुर्वतो युक्तकर्म चायुक्तस्य, क्षुद्रपशुवृषाणां पुंस्त्वोपघातिनो दास्या गर्भमौषधेन पातयतश्च पूर्वस्साहसदण्डः।

पितापुत्रयोर्दम्पत्योर्भ्रातृभगिन्योर्मातुलभागिनेययोश्शिष्याचार्ययोर्वा परस्परमपतितं त्यजतस्सार्थाभिप्रयातं ग्राममध्ये वा त्यजतः पूर्वस्साहसदण्डः। कान्तारे मध्यमः। तन्निमित्तं भ्रेषयत उत्तमः। सहप्रस्थायिष्वन्येष्वर्धदण्डाः।

पुरुषमबन्धनीयं बध्नतो बन्धयतो बन्धं वा मोक्षयतो बालमप्राप्तव्यवहारं बध्नतो बन्धयतो वा सहस्रदण्डाः। पुरुषापराधविशेषेण दण्डविशेषः कार्यः।

तीर्थकरस्तपस्वी व्याधितः क्षुत्पिपासाध्वक्लान्तस्तिरोधानपदो दण्डखेदी निष्किञ्चनश्चानुग्राह्याः।

देवब्राह्मणतपस्विस्त्रीबालवृद्धव्याधितानामनाथानामनभिसरतां धर्मस्थाः कार्याणि कुर्युः। न च देशकालभोगच्छलेनातिहरेयुः।

पूज्या विद्याबुद्धिपौरुषाभिजनकर्मातिशयतश्च पुरुषाः।

एवं कार्याणि धर्मस्थाः कुर्युरच्छलदर्शिनः।
समास्सर्वेषु भावेषु विश्वास्या लोकसम्प्रियाः॥

इति कौटिलीयार्थशास्त्रे धर्मस्थीये तृतीयाधिकरणे विंशोऽध्यायः,
द्यूतसमाह्वयं प्रकीर्णकानि। आदितस्सप्तसप्ततितमोऽध्यायः।
एतावता कौटिलीयस्यार्थशास्त्रस्य धर्मस्थीयं
तृतीयमधिकरणं समाप्तम् ॥०॥

---

# কৌটিলীয় অর্থশাস্ত্র

[ প্রাচীন ভারতের রাজনীতি ও অর্থনীতিবিষয়ক গ্রন্থ ]

প্রথম খণ্ড

কলিকাতা প্রেসিডেন্সি কলেজের সংস্কৃতবিভাগের ভূতপূর্ব্ব প্রধান অধ্যাপক

ও

কলিকাতা ও ঢাকা বিশ্ববিদ্যালয়ের প্রাক্তন অধ্যাপক

ডক্‌টর রাধাগোবিন্দ বসাক এম. এ., পি.এইচ.ডি.

কর্ত্তৃক

বঙ্গভাষায় কৃতানুবাদ

জেনারেল প্রিন্টার্স য্যাণ্ড পাব্লিশার্স প্রাইভেট লিমিটেড

১১৯, ধর্মতলা স্ট্রীট : কলিকাতা-১৩

যে-যে কৌটিল্যচরিত দেশনায়ক নিজ নিজ সূক্ষ্ম বুদ্ধির
প্রয়োগ করিয়া ভারতের স্বাধীনতা-সংগ্রামে বিজয়ী
হইয়াছেন, অর্থশাস্ত্রবিৎ সেই-সেই পূজনীয়
মহাপুরুষদিগকে স্মরণ করিয়া
তাঁহাদের উদ্দেশ্যে এই গ্রন্থের
উৎসর্গ করা হইল।

( দ্বিতীয় সংস্করণের প্রথম খণ্ডের )

# মুখবন্ধ

বিগত ইং ১৯৫০ সালের ১৮ই জুলাই তারিখে কৌটিলীয় অর্থশাস্ত্রের প্রথম খণ্ডের সংস্কৃত বঙ্গানুবাদ কলিকাতায় প্রকাশিত হইয়াছিল এবং দ্বিতীয় খণ্ডের বঙ্গানুবাদ গ্রন্থ ইং ১৯৫১ সালের ২৩শে মার্চ্চ তারিখে কলিকাতায় প্রকাশিত হইয়াছিল। সুধীসমাজ আমাদের বঙ্গানুবাদের সাহায্যে সুপ্রাচীন কৌটিলীয় অর্থশাস্ত্রের মত দুরূহ সংস্কৃতগ্রন্থের বিষয়াবলী বুঝিবার অবসর পাইয়া পরিতুষ্টচিত্তে আমাকে নানারূপ সহানুভূতি-পূর্ণ উৎসাহ প্রদান করিয়াছেন। গত ১১-১২ বৎসরে আমাদের মুদ্রিত ও প্রকাশিত বইগুলি নিঃশেষভাবে বিক্রীত হইয়া গিয়াছে। বহু মনীষী প্রাজ্ঞ পণ্ডিত, অধ্যাপক, অন্যান্য শিক্ষক ও ছাত্র-ছাত্রীরা আমার গ্রন্থের দ্বিতীয় সংস্করণ শীঘ্র প্রকাশ করার জন্য অনুরোধ জানাইয়াছেন। আমার মনে দৃঢ় বিশ্বাস হইয়াছে যে, এই সুকঠিন সংস্কৃত গ্রন্থের বঙ্গানুবাদ প্রকাশিত হওয়ায়, প্রাচীন অর্থশাস্ত্রের পঠন-পাঠনের দিকে সামাজিকদিগের দৃষ্টি অনেকটা আকৃষ্ট হইতে পারিয়াছে। এই ভাবিয়া আমি তাঁহাদের নিকট কৃতজ্ঞচিত্তে বাধিত বোধ করিতেছি।

পূর্ব্বে কলিকাতা ও ঢাকা বিশ্ববিদ্যালয়ে সংস্কৃতের এম্-এ পরীক্ষার্থিদিগের জন্য কৌটিলীয় অর্থশাস্ত্রের কতক অংশ পাঠ্য বিষয় বলিয়া নির্দ্ধারিত ছিল। এখন অত্যন্ত সুখের বিষয় যে, এই গ্রন্থের অংশবিশেষ কলিকাতা ও বর্দ্ধমান বিশ্ববিদ্যালয়ে সংস্কৃত বি-এ ( অনার্স ) পরীক্ষার্থিদিগের পাঠ্য তালিকাভুক্তও হইয়াছে। স্নাতকোত্তর সময়ে ভারতীয় ইতিহাস সম্বন্ধীয় গবেষণায় ব্যাপৃত হইবে যে-সব ছাত্র-ছাত্রীরা, তাহাদের পক্ষে প্রাচীন রাজনীতি ও অর্থনীতি বিষয়ক কৌটিলীয় অর্থশাস্ত্রের জ্ঞান যে অত্যাবশ্যকীয় তদ্বিষয়ে সন্দেহ নাই। কাজেই বি-এ ও এম্-এ, পরীক্ষায় এই গ্রন্থের সহিত পূর্ব্ব পরিচয় থাকিলে—বিদ্যার্থিদিগের পরে গবেষণাকার্য্যে তাহা অতীব প্রয়োজনীয় ও মূল্যবান মনে হইবে।

প্রথম সংস্করণে আমরা বঙ্গানুবাদের সহিত মূল সংস্কৃত গ্রন্থ মুদ্রিত করিয়া প্রকাশ করিতে না পারায় দুঃখ প্রকাশ করিয়াছিলাম। ছাত্র-ছাত্রীরা অনেকেই মূল সংস্কৃত পাঠ্যাংশ মুদ্রিত পুস্তক হইতে নিজ নিজ খাতায় স্বহস্তে লিখিয়া

লইয়া বিষয় পাঠ করে। তাহাদের সনির্ব্বন্ধ অনুরোধে এবার আমরা অনুবাদের দুই খণ্ডেরই সহিত মূল সংস্কৃত গ্রন্থ মুদ্রিত করিয়া সম্বদ্ধ করিয়া দিয়াছি। ইহাতে পাঠক-পাঠিকার সুবিধা হইবে তাহাতে সন্দেহ নাই।

আর একটি বিষয়ে পণ্ডিতসমাজের দৃষ্টি আকৃষ্ট করিতে ইচ্ছা করি। অর্থশাস্ত্রের বঙ্গানুবাদের প্রথম সংস্করণের দ্বিতীয় খণ্ডে পরিশিষ্টরূপে আমি প্রাচীন দণ্ডনীতি ও অর্থনীতি বিষয়ক প্রায় ৬০০।৭০০ পারিভাষিক শব্দের তালিকা ও সেগুলির অভিধান প্রকাশ করিয়াছিলাম—তাহা হইতে আমাদের বাঙ্গাল' প্রদেশের পরিভাষা কমিটির সভ্যগণ কোন কোন নূতন শব্দের চয়ন করিয়া নিয়াছেন কি না, তাহা আমি জানি না। তবে এই বিষয় শুনিয়াছি যে, ভারতের অন্যান্য প্রদেশের কোন কোন পণ্ডিতেরা সেই পারিভাষিক অর্থশাস্ত্রবিষয়ক অনেক শব্দ স্থানীয় ভাষায় ব্যবহার জন্য গ্রহণ করিয়াছেন।

সর্ব্বশেষে বক্তব্য এই যে, কলিকাতার প্রসিদ্ধ জেনারেল প্রিণ্টারস্ এণ্ড পাবলিশারস্ নামক প্রতিষ্ঠানের প্রধান স্বত্বাধিকারী আমার পূর্ব্বতন স্নেহাস্পদ ছাত্র শ্রীমান্ সুরেশচন্দ্র দাস, এম্-এ, এবার এই গ্রন্থের মুদ্রণ ও প্রকাশনকার্য্যের সম্পূর্ণ ভার গ্রহণ করিয়া আমাকে অধিকতর কৃতজ্ঞতাপাশে বদ্ধ করিয়াছেন।

কলিকাতা, ৬৯নং বালিগঞ্জ গার্ডেনস,
বালিগঞ্জ, কলিকাতা-১৯
১৬ই আশ্বিন, বাং ১৩৭০ সন,
১লা অক্টোবর, ইং ১৯৬৩ সাল।

ইতি—
**শ্রীরাধাগোবিন্দ বসাক**

( প্রথম সংস্করণের প্রথম খণ্ডের )

## মুখবন্ধ

শ্রীভগবানের ইচ্ছায় কৌটিলীয় অর্থশাস্ত্রের বঙ্গানুবাদ ( প্রথমখণ্ড ) মুদ্রিত হইয়া প্রকাশিত হইল। বিগত দ্বিতীয় মহাযুদ্ধের তাণ্ডবলীলা চলিতে থাকার সময়ে এবং দেশময় স্বাধীনতাসংগ্রাম অব্যাহতগতিতে বৃদ্ধি পাইতে থাকা কালে, সরকারী কলেজের অধ্যাপনাকার্য্য হইতে অবসরগ্রহণের পরে, আমি এই গ্রন্থের অনুবাদকার্য্যে ব্রতী হইয়া প্রায় আড়াই বৎসর পর্য্যন্ত ইহাতে অভিনিবিষ্ট থাকিয়া এই শ্রমসাধ্য ব্রত সমাপন করিয়াছিলাম। অনুবাদকার্য্যের অবসানের পরেও, এই অনুবাদটি গ্রন্থাকারে মুদ্রিত ও প্রকাশিত করা হইবে কি না, সে

সম্বন্ধে গত দুই বৎসর পর্য্যন্ত আমার মনে যে দ্বৈধীভাব ছিল, কলিকাতা বিশ্ব-বিদ্যালয়ের কর্ত্তৃপক্ষ ও অন্যান্য সহৃদয় কৃতবিদ্য বন্ধুবান্ধবের প্ররোচনায় তাহা অবশেষে ত্যাগ করিয়া আমি ইহার মুদ্রণ ও প্রকাশকার্য্যের ব্যবস্থায় প্রবৃত্ত হইয়াছিলাম। বর্ত্তমান সময়ে গ্রন্থমুদ্রণ অত্যন্ত ব্যয়সাধ্য, এই জন্য অনুবাদের সঙ্গে মূল সংস্কৃত গ্রন্থ ছাপাইতে না পারায় আমি অত্যন্ত দুঃখিত।

সংস্কৃত-সাহিত্য-সাগরের একটি প্রধান ও প্রকৃষ্ট রত্নস্বরূপ এই কৌটিলীয় অর্থশাস্ত্রখানি আজ প্রায় ৪১ বৎসর পূর্ব্বে আবিষ্কৃত হইয়া প্রকাশিত হইয়াছিল। এই আবিষ্কার কেবল ভারতীয় সাহিত্যের নহে, পৃথিবীর সর্ব্ব সাহিত্যের একটি স্মরণীয় ঘটনা। এই গ্রন্থ আমরা সর্ব্বপ্রথম পাঠ করিতে আরম্ভ করি ইং ১৯১১ সাল হইতে। রাজসাহীর বরেন্দ্র-অনুসন্ধানসমিতির যে ত্রিমূর্ত্তিস্বরূপ ছিলেন ৺অক্ষয়কুমার মৈত্রেয়, ৺রায় বাহাদুর রমাপ্রসাদ চন্দ ও দিঘাপতিয়ার রাজকুমার ৺শরৎকুমার রায়, তাঁহাদের সাহচর্য্যে প্রত্নতত্ত্ববিষয়ক গবেষণায় নিযুক্ত থাকিয়া বাঙ্গালা দেশের তখনকার নবাবিষ্কৃত তাম্রশাসন ও প্রস্তরলিপি প্রভৃতির পাঠোদ্ধারসাধন এবং তদ্‌ব্যাখ্যা ও তৎসমালোচনায় প্রবৃত্ত থাকা সময়ে, আমি বিভিন্ন তাম্রশাসনে 'ভূমিচ্ছিদ্র-ন্যায়' কথাটির মূলতথ্য কি হইতে পারে তদ্‌গবেষণার ফলে এই কৌটিলীয় অর্থশাস্ত্রের দ্বিতীয় অধিকরণের দ্বিতীয় অধ্যায়ে 'ভূমিচ্ছিদ্র-বিধান'-নামক প্রকরণের বিষয় অবগত হই। আমার পক্ষে সর্ব্বপ্রথম এই গ্রন্থে প্রবেশের ইতিহাস হইল ইহাই। এই দুরূহ গ্রন্থের কিছু বিষয় যে তখন বেশী বুঝিতে পারিতাম—তাহা এখন স্পর্দ্ধার সহিত বলিতে পারি না। তারপর, ইহাতে আমাকে অনুপ্রবিষ্ট হইতে হয়, যখন ৺মহামহোপাধ্যায় ডক্টর হরপ্রসাদ শাস্ত্রী মহাশয় ঢাকা বিশ্ববিদ্যালয়ের এম্-এ. ক্লাসের ছাত্রদিগকে এই গ্রন্থের অংশবিশেষ পড়াইবার জন্য আমাকে আদেশ করেন। পরে কলিকাতা বিশ্ব-বিদ্যালয়েও আমাকে কিছু কাল ইহা পড়াইতে হইয়াছিল। এই পাঠন-কার্য্যের সুযোগ না পাইলে, এই গ্রন্থের বঙ্গানুবাদবিষয়ে কোন প্রবৃত্তিই আমার মনে আসিত কি না, তাহা বলিতে পারি না। আমি যখন অনুবাদকার্য্যে ব্যাপৃত ছিলাম, তখন সংবাদ পাইলাম যে, আমার পূর্ব্বতন সহযোগী ৺অশোকনাথ শাস্ত্রীও এই কার্য্যে হস্তক্ষেপ করিয়াছেন এবং 'ভারতবর্ষ'-নামক মাসিক পত্রিকার কয়েক সংখ্যায় এই বিষয়ে তাঁহার কয়েকটি প্রবন্ধও প্রকাশিত হইয়াছিল, আমি বুঝিয়াছিলাম যে, তাঁহার মত নানাকার্য্যে ব্যাপৃত অধ্যাপকের পক্ষে এই ১৫০টি অধ্যায়-সমন্বিত গ্রন্থের বঙ্গানুবাদ অনেক বৎসর ব্যাপিয়া করিলেও যদি

কখনও শেষ হয়। পরে তিনি অনুবাদকার্য্য হইতে ক্ষান্ত থাকেন এবং আরও কিছুকাল গত হইলে, তিনি দেহরক্ষা করেন। এই শাস্ত্রের অনুবাদকার্য্যে অগ্রসর হইতে থাকিয়া আমি ক্রমশঃ বুঝিতে পারিতেছিলাম যে, কি দুঃসাধ্য কার্য্যে আমি হস্তক্ষেপ করিয়াছি। কারণ, গ্রন্থখানি অতি প্রাচীন ও ইহাতে যে-ভাবে বিষয়গুলি আলোচিত হইয়াছে এবং যেরূপ পারিভাষিক শব্দপ্রয়োগ সহ ইহা লিখিত হইয়াছে তাহাতে অনেকস্থলে সম্যগ্‌ভাবে অর্থবোধ করিতে সমর্থ হইয়াছি তাহা বলিতে সাহস হয় না। এই গ্রন্থের হস্তলিখিত প্রাচীন পাণ্ডুলিপির প্রাচুর্য্য না থাকায়, স্থানে স্থানে পাঠশুদ্ধিবিষয়ে সংশয়ও মনে উপস্থিত হয়। ডক্টর শ্যাম শাস্ত্রীর ইংরেজী অনুবাদ ও দাক্ষিণাত্যের অশেষশাস্ত্রনিষ্ণাত মহামহোপাধ্যায় গণপতি শাস্ত্রী মহোদয়ের সংস্কৃত টীকা প্রকাশিত না হইলে, ভারতীয় অন্য কোনো প্রাদেশিক ভাষাতে এই গভীর তথ্যসংবলিত কঠিন গ্রন্থের ভাষান্তরিত হওয়ার সম্ভাবনা কম হইত বলিয়া প্রতিভাত হয়। এই শাস্ত্রের বঙ্গানুবাদ করিতে যাইয়া, অর্থবোধের সৌকর্য্যার্থ আমি ব্যাখ্যাগর্ভ অনুবাদেরই চেষ্টা করিয়াছি—কেবল শাব্দিক ভাষান্তররূপ অনুবাদে প্রবৃত্ত হই নাই। ভারতীয় ভাষাসমূহের মধ্যে বিদ্যাভাস্কর বেদরত্ন উদয়বীর শাস্ত্রীর হিন্দী অনুবাদ হইতেও আমি নিজকার্য্যে বেশ সহায়তা লাভ করিয়াছি।

স্বয়ং কৌটিল্য বহুসংখ্যক পূর্ব্বাচার্য্যদিগের রচিত অর্থশাস্ত্রবিষয়ক গ্রন্থরাজি ও রাজনীতি ও অর্থনীতিবিষয়ক অন্যান্য মতামত পর্য্যালোচনা করিয়া যে গ্রন্থখানি লিখিয়াছেন এবং যাহাতে তিনি নানাশাস্ত্র হইতে লব্ধ নিজের পরিপক্ব জ্ঞানের পরিচয় দিয়াছেন, তাহা যে অত্যন্ত দুর্ব্বোধ গ্রন্থ হইবে তদ্বিষয়ে সন্দেহ থাকার অবসর নাই। তিনি যে এই অর্থশাস্ত্রে আন্বীক্ষিকী, ত্রয়ী, বার্ত্তা ও দণ্ডনীতি—এই বিদ্যাচতুষ্টয়েই নিজের অধিকারের প্রমাণ দিয়াছেন তাহা নহে, ইহাতে তিনি শুল্বশাস্ত্র, বাস্তুবিদ্যা, ধাতুবিদ্যা, রসায়নশাস্ত্র, উদ্ভিদ্‌বিদ্যা, ভূগোল ও ইতিহাস, বেদ প্রভৃতি নানাবিদ্যা ও নানাশাস্ত্রের প্রকৃষ্ট জ্ঞানেরও পরিচয় প্রদান করিয়াছেন। কাজেই আমাদের মত স্বল্পজ্ঞান ও মন্দমতি লোকের পক্ষে এই গ্রন্থের সম্পূর্ণ গ্রন্থিভেদ একরূপ অসম্ভব। তথাপি মহাকবি ভবভূতির সেই প্রসিদ্ধ শ্লোকের অর্দ্ধাংশের কথা স্মরণ হয়—

"উৎপৎস্যতেঽস্তি মম কোঽপি সমানধর্ম্মা
কালো হ্যয়ং নিরবধির্বিপুলা চ পৃথ্বী"।

আমরা এই গ্রন্থখানি যেরূপ বুঝিয়াছি, সেইরূপেই ইহার অনুবাদ লিপিবদ্ধ

করিয়া রাখিলাম। পৃথিবী ত বাস্তবিকই বিপুল—কোথায় কে এখনই আছেন যিনি আরও অধিকতর উৎকর্ষসহকারে অনুবাদ করিতে পারেন। অথবা, কালও নিরবধি—ভবিষ্যতে হয়ত অন্য যোগ্যতর ব্যক্তি অনুবাদের উৎকর্ষ বাড়াইতে সমর্থ হইবেন।

বহুকাল পরে আজ ভারতবর্ষ সর্ব্বাঙ্গীণ স্বাধীনতা প্রাপ্ত হইয়াছে। ভারতের শাসন ও রক্ষাকার্য্যে যাঁহারা এখন ব্রতী ও দেশের সবগুলি প্রদেশে (বিশেষতঃ বাঙ্গালা প্রদেশে) যাঁহারা মন্ত্রিপদে আরূঢ়, তাঁহাদেরও নিজদেশে প্রাচীনকালে প্রচলিত ও প্রবর্ত্তিত রাষ্ট্রনীতি ও অর্থনীতি-বিষয়ক গ্রন্থের সহিত সবিশেষ পরিচয় থাকা আবশ্যক। আমাদের দেশের প্রাচীন রাজনীতি ও অর্থনীতিবিষয়ক বৈশিষ্ট্য কিরূপ ছিল তাহা না জানা থাকিলে, দেশের সভ্যতা, ভব্যতা ও কৃষ্টিরক্ষা দুষ্কর কার্য্য বলিয়া মনে করা যাইতে পারে। যাহাতে দেশভক্ত রাষ্ট্রনায়কগণের ও বিদ্বৎসমাজের দৃষ্টি এ-দিকে খানিকটা আকৃষ্ট হইতে পারে তজ্জন্যই এই সুপ্রাচীন দুরূহ কৌটিলীয় অর্থশাস্ত্রের বঙ্গানুবাদে আমার প্রয়াস। প্রাচীন রাজনীতি ও অর্থনীতির আলোচনা ও প্রচারবিষয়ে সামাজিকগণের মন ইহা পাঠ করিয়া যদি একটুও পরিবর্ত্তিত ও পরিশোধিত হয়, তাহা হইলেই আমার পরিশ্রম সার্থক বিবেচিত হইবে।

এ-স্থলে কৃতজ্ঞতাসহকারে উল্লেখ করা যাইতে পারে যে, আমি এই অনুবাদ-কার্য্যে উৎসাহ পাইয়াছি আমার বন্ধু ও প্রাক্তন সহযোগী ডাঃ রমেশচন্দ্র মজুমদার, ডাঃ সুশীলকুমার দে, ডাঃ প্রবোধচন্দ্র লাহিড়ী, ডাঃ জিতেন্দ্রনাথ বন্দ্যোপাধ্যায়, ডাঃ নীহাররঞ্জন রায়, মহামহোপাধ্যায় যোগেন্দ্রনাথ সাংখ্য-বেদান্ত-তর্কতীর্থ-প্রমুখ পণ্ডিত ও মনীষীগণ হইতে। আমার অপর বন্ধু শ্রীললিতকুমার সেন মহাশয়ও আমাকে এই গ্রন্থের প্রকাশবিষয়ে অনেক সুপরামর্শ দিয়া বাধিত করিয়াছেন। কিন্তু, এই শ্রমসাধ্য অনুবাদকার্য্যের প্রধান প্রযোজক ছিলেন আমার পূর্ব্বতন স্নেহাস্পদ ছাত্র শ্রীমান্ সুরেশচন্দ্র দাস এবং তাঁহার প্রযত্নে ও সহায়তায় এই গ্রন্থ তাঁহারই জেনারেল প্রিণ্টারস্ এণ্ড পাব্লিশারস্-নামক প্রতিষ্ঠান হইতে মুদ্রিত ও প্রকাশিত হইল। ইতি—

কলিকাতা, ৬৯নং বালিগঞ্জ গার্ডেনস্,
বালিগঞ্জ, কলিকাতা-১৯
২রা শ্রাবণ, বাং ১৩৫৭ সন,
১৮ই জুলাই, ইং ১৯৫০ সাল।

শ্রীরাধাগোবিন্দ বসাক

# অবতরণিকা

১৯০৯ খ্রীষ্টাব্দে মহীশূরের পণ্ডিত ডক্টর আর. শ্যাম শাস্ত্রী কৌটিলীয় অর্থশাস্ত্রের সর্ব্বপ্রথম একটি সংস্করণ প্রকাশ করেন। তৎপূর্ব্বে পৃথিবীর সর্ব্বত্র পণ্ডিতমণ্ডলী এই শাস্ত্রের নামমাত্রই অবগত ছিলেন; এবং কেবল প্রাচীন কোন কোন সংস্কৃত গ্রন্থে ইহার উল্লেখের ও সংস্কৃত টীকা পঞ্জীতে এই শাস্ত্র হইতে উদ্ধৃত বচনবিশেষের কথা তাঁহাদের পরিজ্ঞাত ছিল। দাক্ষিণাত্যের এই মনীষীর এই গ্রন্থের আবিষ্কার ভারতীয় সংস্কৃত সাহিত্যের নহে, জগতের সর্ব্বসাহিত্যের ইতিহাসে এক অসাধারণ ঘটনা। পার্থিব বা অ-পারমার্থিক বিষয়ে লিখিত এই প্রাচীন অর্থশাস্ত্রের মূল্যবত্তা অত্যন্ত অধিক। এই বিপুলায়তন গ্রন্থমধ্যে অত্যন্ত দুরূহ ও প্রায় দুর্ব্বোধ অনেক বাক্য ও শব্দনিচয় রহিয়াছে। একজন ভারতীয় শাস্ত্রবিৎ বিদেশীয় পণ্ডিত এই অর্থশাস্ত্রকে একখানি 'গ্রন্থ' না বলিয়া ইহাকে একটি 'গ্রন্থাগার'-নামে পরিচিত করিতে চাহিয়া বাস্তবিকই ইহার মর্যাদা রক্ষা করিয়াছেন। পণ্ডিতমণ্ডলী কর্ত্তৃক এই গ্রন্থখানিতে সমুদ্দিষ্ট বহুবিধ বিষয়ের সম্যক্ পর্যালোচনা, সতর্ক বিচার ও উপযুক্ত মূল্যনির্ণয় সমাপ্ত হইতে আরও বহু বহু বৎসরের পরিশ্রমের প্রয়োজন হইবে—এইরূপ বলিলে অত্যুক্তি করা হইবে না। এই শাস্ত্রের যে চারিখানি প্রসিদ্ধ সংস্করণে ব্যাখ্যা ও অনুবাদসহ পাঠ এযাবৎ প্রকাশিত হইয়াছে, সেই পাঠ সর্ব্ব-শুদ্ধ বলিয়া গৃহীত হইতে পারে না। অনেক স্থলে পাঠ-বিষয়ে সন্দেহ রহিয়া যায়। ভবিষ্যতে ভারতের দিগ্‌বিদিকে অবস্থিত বিভিন্ন প্রদেশের কোন কোন স্থানে এই গ্রন্থের আরও হস্তাক্ষর-লিখিত পাণ্ডুলিপি আবিষ্কৃত হইতে পারিলে, তৎসাহায্যে পরে ইহার পাঠশুদ্ধি ঘটিতে পারে। বাস্তবিকই এই বিশাল অর্থশাস্ত্রের সাভিনিবেশ পঠন-পাঠন একটি দুরূহ কাজ এবং ইহার শুদ্ধ ব্যাখ্যাকর্ম্মও স্থানে স্থানে কষ্টসাধ্য ব্যাপার।

বিগত চল্লিশ বৎসরের মধ্যে প্রাচ্য ও প্রতীচ্য দেশের অনেক মনীষাসম্পন্ন ছাত্র, অধ্যাপক ও প্রাজ্ঞ পাঠক এই অর্থশাস্ত্রে বর্ণিত ও পর্যালোচিত বিষয়বিশেষ অবলম্বন করিয়া গবেষণা চালাইয়া পণ্ডিতসমাজের পত্রিকাদিতে প্রবন্ধাকারে, কিংবা স্বরচিত পুস্তকপুস্তিকাতে তাঁহাদের গবেষণার ফল প্রকাশ করিয়াছেন। এস্থলে আমরা সেগুলির বিস্তৃত উল্লেখের প্রয়োজন বোধ করি না।

এই প্রাচীন অর্থশাস্ত্রে প্রাপ্ত ভাব ও বিষয়সমূহ পাঠ ও বিবেচনা করিয়া আমাদের মনে ইহার ভিত্তিস্বরূপ যেরূপ চিত্র প্রতিফলিত হইয়াছে তাহারই কিঞ্চিৎ আভাস নিম্নে লিপিবদ্ধ হইতেছে। এই অবতরণিকার শেষাংশে আমরা দুইটি তর্কবহুল প্রশ্নের সংক্ষিপ্ত উল্লেখ ও তৎসমাধানের প্রয়াস করিব। প্রথম প্রশ্নটি হইল এই :—খ্রীষ্টপূর্ব্ব চতুর্থ শতাব্দে ভারতবর্ষের প্রথম সম্রাট্ মৌর্য্যবংশীয় চন্দ্রগুপ্তের প্রধানমন্ত্রী কৌটিল্য ( তদীয় অপর দুই নাম হইল চাণক্য ও বিষ্ণুগুপ্ত ) নিজেই এই অর্থশাস্ত্র প্রণয়ন করিয়াছেন অথবা তদীয় মতাবলম্বী পরম্পরাপ্রাপ্ত পরবর্ত্তীকালের কোন শিষ্য বা শিষ্যসংঘ ইহা রচনা করিয়াছেন? দ্বিতীয় প্রশ্নটি হইল এই :—এই গ্রন্থের প্রতিপাদ্য বিষয়সমূহ কি কোন রাজ্যবিশেষে প্রচলিত অর্থনীতি, রাজনীতি, ও সমাজনীতির চিত্র, অথবা সে-গুলি যে-কোন কালে ও যে-কোন স্থানে সাম্রাজ্য-প্রতিষ্ঠাবিষয়ে প্রয়োজনীয় আদর্শস্বরূপ একটি রীতিনীতির কথা? সাধারণতঃ কৌটিলীয় অর্থশাস্ত্রকে লোকেরা রাজনীতি ও রাজ্যশাসন-প্রণালীর গ্রন্থ বলিয়া নির্দ্দেশ করিয়া থাকেন। দণ্ডনীতি-বিষয়ক গ্রন্থ বলিয়াও এই অর্থশাস্ত্র পণ্ডিতসমাজে পরিচিত হয়।

প্রাচীন ভারতে ঐতিহাসিক বিভিন্ন যুগে দেশের বিভিন্ন প্রদেশের সমসময়ে বা ভিন্ন ভিন্ন সময়ে আমরা রাজতন্ত্র, গণতন্ত্র, জাতি বা বর্গতন্ত্র ও কুলস্বামিক রাজ্যের শাসনপ্রণালী প্রতিষ্ঠিত ও প্রচলিত ছিল বলিয়া জানিতে পারি। কিন্তু, অধিকসংখ্যক রাজ্যেই রাজতন্ত্রশাসনের ব্যবস্থাই নিয়মিত ছিল। রাজ্যের বা রাজশক্তির তত্ত্ববিশ্লেষণে রত প্রাচীন রাজনীতিবিদ্‌গণ মানব প্রকৃতির দোষ-ভাগের কথা কখনই বিস্মৃত হইতেন না, কারণ, তাঁহারা ভাবিতেন যে, শীল ও ও সদাচারের ভ্রংশকারী ও অন্যের স্বাধীনতা ও অধিকারে হস্তক্ষেপকারী অসজ্জনের অভাব কখনই সমাজে ছিল না। কাজেই দুষ্টজনের অত্যাচার ও পাপাচরণ নিবারিত রাখিবার জন্য শাসনতন্ত্রের প্রয়োজনীয়তা সর্ব্বদাই উপলব্ধ হইত। অন্যথা, জনগণের জীবন ও সম্পত্তির রক্ষণকার্য্য ও তাহাদের শাস্ত্রবিহিত বর্ণাশ্রমধর্ম্মের পালনকার্য্য অচল হইয়া যাইতে পারে—এই ভয় অস্বাভাবিক নহে। প্রাচীন হিন্দু-রাজনীতিতে লোকের জীবন ও সম্পত্তি এবং ধর্ম্মরক্ষারূপ দুইটি প্রধান মূল বিষয়ের চিন্তা, আলোচনা ও নির্ণয় পরিদৃষ্ট হয়। কিন্তু, এই দুইটি বিষয়ই নির্ভর করে রাজার দণ্ডশক্তি-প্রণয়নদ্বারা লোকসমাজের কণ্টক বা দোষকারীকে শাস্তি দেওয়ার উপর। প্রজাসমূহের হিত ও সুখবিধানই রাজার প্রধান ও প্রথম কর্ত্তব্য এবং তাঁহার দ্বিতীয় কর্ত্তব্য হইল লোকস্থিতি বা সমাজ-

শৃঙ্খলা ব্যবস্থিত রাখা। সেই জন্য রাজাকে 'দণ্ডধর' বলিয়াও অভিহিত করা হয়। বরং তাঁহাকে দণ্ডশক্তির বিগ্রহ বলিয়াও পরিচিত করা যায়। রাজনীতিশাস্ত্রে তাঁহাকে চতুর্ব্বর্গের ও চতুরাশ্রমের 'প্রতিভূ' বলিয়াও বর্ণিত দেখা যায়। কৌটিল্য, কামন্দক, শুক্র প্রভৃতির রচিত রাজনীতি বা দণ্ডনীতিশাস্ত্রে, মনু, যাজ্ঞবল্ক্য, নারদ প্রভৃতির রচিত স্মৃতিগ্রন্থে, রামায়ণ ও মহাভারতে এবং পরবর্ত্তী সময়ের মহাকবিগণের রচিত মহাকাব্যাদিতেও রাজদণ্ডবিষয়ে যথেষ্ট আলোচনা পরিদৃষ্ট হয়। রাজ্যকে মাৎস্যন্যায়ের অভিভব হইতে রক্ষা করিতে হইলে, রাজাকে দুষ্টশাসনের শক্তি প্রয়োগ করিতেই হইবে। তাহা না হইলে, জলমধ্যে বৃহদাকার মৎস্যসমূহের গ্রাস হইতে যেমন ক্ষুদ্র ক্ষুদ্র মৎস্যসমূহ আত্মরক্ষা করিতে পারে না, তেমন রাজ্যেও রাজ্যশাসনের বিধান যথাযথভাবে প্রচলিত না থাকিলে, সমাজে সবলের কবল হইতে দুর্ব্বলকে রক্ষা করা কঠিন হইয়া পড়ে। অতএব, ইহা নিশ্চিত যে, রাজার প্রভুশক্তি (কোশদণ্ডজ তেজঃ) ও নিগ্রহশক্তির ভয়েই দুষ্কৃতকারীরা ভীত ও ত্রস্ত থাকে, এবং লোকসমাজে শৃঙ্খলা ও যোগক্ষেম রক্ষিত হয়।

রাজা ও প্রজার মধ্যে যে সামাজিক সংবিৎ বা চুক্তিসম্বন্ধে একটা মতবাদের কথা (The Theory of Social Contract) বর্ত্তমানকালের সমাজনীতিগ্রন্থসমূহে অবগত হওয়া যায়—তাহা প্রাচীন ভারতের নীতিশাস্ত্রজ্ঞ পণ্ডিতেরাও বেশ জানিতেন। মানুষ যখন নীতিবিৎ জন্তুবিশেষই বটে, তখন আদিম সমাজে বাসকালেই মানবগণের পরস্পরের ঐকমত্যে একটি রাজনীতিক সংঘ রচনা করা একটা সমুচিত কার্য্য বলিয়াই গণ্য হইবার যোগ্য। এই সংবিৎ বা চুক্তিতে মানুষেরা দুইটি পক্ষে বিভক্ত হইয়াছিল। এক পক্ষে তাহাদের দ্বারা নির্ব্বাচিত এক রাজা, অপর পক্ষে প্রজাবর্গ। রাজা প্রজাদিগের নিজ নিজ অধিকার ধর্ম্মতঃ রক্ষা করার প্রতিশ্রুতিতে আবদ্ধ হইলে পর, প্রজারাও রাজকর্ত্তৃক লোকরক্ষার ভারগ্রহণস্বীকারের পরিবর্ত্তে তাঁহাকে সমাজস্থিতিরক্ষক-হিসাবে তাহাদের ধান্যষড়্‌ভাগাদি কর ও অপরাধীর দোষের জন্য বিহিত অর্থদণ্ড প্রভৃতি দিতে প্রস্তুত হইয়াছিল। কৌটিলীয় অর্থশাস্ত্রে ও অন্যান্য রাজনীতিশাস্ত্রে এইরূপ চুক্তির উল্লেখ ও সূচনা পরিদৃষ্ট হয়।

ভারতের প্রাচীন অর্থশাস্ত্রপ্রণেতারা ও পরবর্ত্তী নীতিশাস্ত্রলেখকেরা রাজ্যকে (State বা Body-Politic-কে) সপ্তপ্রকৃতিক বা সপ্তাঙ্গ বলিয়া নির্দ্দেশ করিয়াছেন। কৌটিল্য 'প্রকৃতিসম্পদ্'-নামক প্রকরণে (৬ষ্ঠ অধিঃ ১ম

অধ্যায়ে ) রাজ্যের এই সাতটি প্রকৃতি বা অঙ্গের নাম ও ক্রম এইরূপে লিপিবদ্ধ করিয়াছেন, যথা—স্বামী, অমাত্য, জনপদ, দুর্গ, কোষ, দণ্ড ও মিত্র। শব্দকোষকার অমরসিংহ পরে এই নামগুলির অল্পস্বল্প একটি শাব্দিক ও ক্রমিক পরিবর্ত্তন করিয়াছেন, যথা—( স্বামী স্থলে ) রাজা, অমাত্য, ( মিত্র স্থলে ) সুহৃৎ, কোষ, ( জনপদ স্থলে ) রাষ্ট্র, দুর্গ ও ( দণ্ড স্থলে ) বল। প্রভুশক্তি, মন্ত্রশক্তি ও উৎসাহশক্তিতে শক্তিমান্ স্বামী বা রাজাই হইলেন ভারতীয় প্রাচীন রাজতন্ত্র-শাসনপ্রণালীর কেন্দ্ররূপী সর্ব্বপ্রধান ও প্রথম প্রকৃতি। অমাত্য-নামক দ্বিতীয় প্রকৃতিদ্বারা আমরা কেবল রাজার ধী-সচিব বা মতিসচিব ও কর্ম্মসচিবগণকেই বুঝিব না; রাজতন্ত্রশাসনপ্রণালীতে সর্ব্বপ্রকার শাসনাধিকরণ বা শাসন বিভাগেরও যাঁহারা অধ্যক্ষ ছিলেন তাঁহাদিগকে—এমন কি, অধ্যক্ষগণের নিম্নস্থ ক্ষুদ্র ক্ষুদ্র কর্ম্মচারী বা আমলাগণকেও বুঝিব। তৃতীয় প্রকৃতি জনপদ বা রাষ্ট্র-শব্দদ্বারা পুর বা নগর ব্যতিরিক্ত রাজ্যের অবশিষ্ট দেশ ও দেশবাসীদিগকে বুঝিতে হইবে। দুর্গ-নামক চতুর্থ প্রকৃতির অর্থ কেবল জলদুর্গ, স্থলদুর্গ, বনদুর্গ, পর্ব্বতদুর্গ, মরুদুর্গ ও প্রান্তদুর্গাদি নহে; প্রাচীনকালে ভারতের প্রত্যেক বড় বড় পুর ও নগর প্রাচীর ও পরিখাদিদ্বারা সুরক্ষিত ছিল বলিয়া সেগুলিও দুর্গশব্দবাচ্য ছিল। পঞ্চম প্রকৃতি কোষশব্দদ্বারা রাজভাণ্ডারের রত্নাদি সারবস্তু ও বস্ত্রাদি ফল্গু বা অসার বস্তুকে অর্থাৎ যতপ্রকার দ্রব্যরাজি সেখানে থাকে সেগুলিকে বুঝায়। ষষ্ঠ প্রকৃতি দণ্ড বা বলশব্দদ্বারা হস্তী, অশ্ব, রথ ও পদাতিক—এই চতুরঙ্গ সেনাকে বুঝিতে হইবে। আবার এই পদাতিক সেনারও অনেকপ্রকার ভেদ আছে, যথা—মৌলবল, ভৃতকবল, শ্রেণীবল, মিত্রবল, অমিত্রবল ও অটবীবল। সপ্তম প্রকৃতি মিত্র বা সুহৃৎশব্দটি দ্বাদশরাজমণ্ডলের মধ্যে যাঁহারা বিজিগীষু রাজার সহিত মিত্রতাসূত্রে আবদ্ধ ( অর্থাৎ যাঁহারা যুদ্ধাদিতে তাঁহার সহায়ক সুহৃৎ বা allies) তাঁহাদিগকে বুঝায়। রাজা স্বয়ং ও তাঁহার মিত্রেরা 'রাজপ্রকৃতি'-সংজ্ঞায় এবং অমাত্যাদি অবশিষ্ট পাঁচটি প্রকৃতি 'দ্রব্যপ্রকৃতি'-সংজ্ঞায়ও অভিহিত হইয়া থাকে। এই সাতটি প্রকৃতি বা অঙ্গ মিলিত হইয়া কার্য্যনির্ব্বাহ করিলে, রাজ্যরূপ শরীর সুচালিত ও পরিপুষ্ট থাকিতে পারে। ইহারা পরস্পরের উপকার সাধন করিলেই সম্যগ্‌ভাবে কার্য্যকর থাকে। পরস্পরনিরপেক্ষ হইয়া চলিলে, ইহারা রাজ্যের বা State-এর ব্যাধি বা প্রকোপ উৎপাদন করে। এই সপ্তাঙ্গ বা সপ্তপ্রকৃতিক রাজ্যই হইল প্রাচীন হিন্দু রাজনীতিতত্ত্বের সারসংগ্রহ।

কৌটিলীয় অর্থশাস্ত্রের বিষয়সূচ এইভাবে সমুদ্দিষ্ট হইয়াছে। সমগ্র গ্রন্থখানি

বিনয়াধিকারিক প্রভৃতি নামে পরিচিত পঞ্চদশ অধিকরণে বিভক্ত হইয়াছে। এই অধিকরণগুলিতে অমাত্যোৎপত্তি-প্রভৃতি নামে আখ্যাত ১৮০টি প্রকরণ বা আলোচ্য বিষয় সন্নিহিত আছে। আবার এই প্রকরণগুলি ১৫০টি অধ্যায়ে বিবেচিত ও আলোচিত হইয়াছে। সুতরাং কোন কোনও অধ্যায়ে একাধিক প্রকরণও নির্ণীত দেখা যায়। সাধারণ দৃষ্টিতে এই গ্রন্থখানি সংস্কৃতভাষার গদ্যে রচিত দৃষ্ট হয় এবং ইহাতে ব্যবহৃত বহুশব্দকে আর্ষপ্রয়োগরূপে ধরিতে হয়। প্রত্যেক প্রকরণের আরম্ভাংশে উক্ত কয়েকটি সংক্ষিপ্ত বাক্যকে আমরা গ্রন্থের 'সূত্র'-রূপে ধরিয়া লইতে পারি। কিন্তু, স্বর্গীয় মহামহোপাধ্যায় পণ্ডিত গণপতি শাস্ত্রী প্রকরণের নামরূপে উক্ত সংক্ষিপ্ত শব্দনিচয়কেই 'সূত্র' বলিয়া ধার্য্য করিতে চাহিয়াছেন। অবশিষ্ট গ্রন্থাংশকে 'ভাষ্য'-রূপে গ্রহণ করিতে হইবে। পালিভাষায় রচিত বৌদ্ধ জাতক-গ্রন্থাবলীতে, গদ্যাংশের শেষভাগে ও কখন কখন মধ্যভাগেও, যেমন আলোচিত মতবাদ বা তত্ত্বাদির পরিপোষণার্থক কয়েকটি শ্লোক প্রাপ্ত হওয়া যায়, কৌটিলীয় অর্থশাস্ত্রেও প্রকরণোক্ত বিষয়সমূহের সারসংগ্রহহিসাবে এক বা একাধিক শ্লোক অধ্যায়ান্তে ও কখন কখন অধ্যায় মধ্যেও লিপিবদ্ধ দৃষ্ট হয়। সে-গুলি কৌটিল্যের নিজের রচিত পদ্য. কিংবা তৎপূর্ববর্ত্তী আচার্য্য-বিশেষের উক্তি তাহা নির্দ্ধারণ করা কঠিন। গ্রন্থাবসানে কৌটিল্য একটি আর্য্যা-শ্লোক এইরূপ লিখিয়া রাখিয়াছেন, যথা—

"দৃষ্ট্বা বিপ্রতিপত্তিং বহুধা শাস্ত্রেষু ভাষ্যকারাণাম্।
স্বয়মেব বিষ্ণুগুপ্তশ্চকার সূত্রং চ ভাষ্যং চ॥"

"শাস্ত্রসমূহের (ব্যাখ্যা-বিষয়ে) ভাষ্যকারগণের মধ্যে বহুপ্রকারের বিপ্রতিপত্তি বা বিবাদ লক্ষ্য করিয়া, বিষ্ণুগুপ্ত স্বয়ং সূত্রও রচনা করিয়াছেন এবং (ইহার) ভাষ্যও রচনা করিয়াছেন।"

কৌটিলীয় অর্থশাস্ত্র রাজতন্ত্র, রাজ্যেরই বিষয়সমূহ অবলম্বন করিয়া লিখিত গ্রন্থ। ইহাতে বর্ণিত রাজতন্ত্র অনিয়ন্ত্রিত রাজার আধিপত্যবিষয়ক নহে; ইহাকে সচিবায়ত্ত রাজ্যই বলা চলে। রাজনীতিবিদ্‌গণের মতে রাজার প্রথম শ্রেষ্ঠ কর্ত্তব্য হইল প্রজাবর্গের হিত ও সুখ উৎপাদন করা, এবং তাহাদের জীবন ও সম্পত্তি রক্ষার জন্য সমাজে বিধি-ব্যবহার বা আইন ও শৃঙ্খলা সুব্যবস্থিত করার চেষ্টায় ব্রতী থাকা। রাজার নিজ রাজ্যমধ্যে প্রজাদিগের যোগক্ষেমের দিকে দৃষ্টি রাখিয়া শাসনব্যবস্থা করার পারিভাষিক নাম হইল 'তন্ত্র'। রাজার দ্বিতীয় শ্রেষ্ঠ কর্ত্তব্য হইল আসন্ন ও দূরবর্ত্তী পররাষ্ট্রসমূহের রাজাদিগের কার্য্যকলাপের উপর তীক্ষ্ণ

